# कालिदासप्रशस्तिः



- पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः ।
  अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥
- कः इह रघुकरे न रमते ।
- निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
  प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥
- इत्थम्भूतः कालिदासः 'कविकुलगुरुः' इति परिगण्यते ।

Contd..

# उपमा कालिदासस्य



- अयं कविः सर्वानपि महाकवीन् औपम्ये अतिशेते |
- अतः 'उपमा कालिदासस्य' इत्युक्तिः प्रसिद्धा जाता |

यथा -

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

Contd....

# दीपशिखा कालिदासः



सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।

नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥



- इदं पञ्चमहाकाव्येषु अन्तर्भवति ।
- रघूनां वंशमधिकृत्यरचितं काव्यं रघुवंशम् इति ।
- स्रोतोकाव्यं श्रीमद्रामायणम् |
- अस्मिन् नवदश सर्गाः सन्ति ।

**Contd...**



- दिलीपमहाराजादारभ्य अग्निवर्णस्य पर्यन्तम् आहत्य 31 इक्ष्वाकुवंशीयानां राज्ञां चरितं वर्णितमस्ति ।
- वीररसप्रधानकाव्यमिदम् ।
- पात्रचित्रणं, संवादसन्निवेशाः, प्रकृतिवर्णनम् इत्यादीनि सहजतया कल्पितानि अनेन महाकविना ।
- अस्य काव्यस्य प्रायशः 40 व्याख्यानानि उपलभ्यन्ते इति कारणात् अस्य माहात्म्यं लोकप्रसिद्धत्वं च ज्ञायते ।



- इदं पञ्चमहाकाव्येषु अन्तर्भवति ।
- इदं महाकाव्यं हिमालयवर्णनात् वस्तुनिर्देशात् आरभते ।
- कुमारस्य सम्भवः यस्मिन् वर्णितं तद् कुमारसम्भवमिति ।
- अस्मिन् 17 सर्गाः सन्ति ।
- शिवपुराणं, पद्मपुराणं, महाभारतम्, इत्यादयः ग्रन्थाः स्रोतोग्रन्थाः ।

Contd....



- पार्वतीजननं, तस्याः विद्याभ्यासः, शिवस्य तपः, मदनदहनं, पार्वत्याः तपः, शिवस्य साक्षात्कारः, तयोर्विवाहः, कुमारजननं, तारकासुरस्य संहारः, इत्यादयः काव्यस्य अस्य प्रधानाः अंशाः ।
- वीररसः अङ्गीरसः तथा श्रृङ्गारकरुणौ च अङ्गरसौ च ।
- काव्येऽस्मिन् हिमालय-वसन्तर्तु-रतिविलापादिषु वर्णनेषु कवेः प्रतिभा दृग्गोचरा भवति ।



- अयं बौद्धः दार्शनिकः, संस्कृतकविश्च ।
- अस्य महाकाव्यद्वयं सौन्दरनन्दं, बुद्धचरितञ्चबौद्धमत - प्रभावितमेव दृश्यते ।
- अस्य काव्यशैली वैदर्भीरीत्याम् आसीत् ।
- प्रसादमाधुर्यगुणोपेतम् अस्य काव्यम् ।

Contd……



- सहजसिद्ध्या प्रकृतिवर्णनं, सहज-मानव-हृदयचित्रणं, लौकिक-उपदेशाः, सुन्दर-हृदयाकर्षक-उपमानानि, रसपोषणं, इत्यादिकम् अस्य काव्यगतवैशिष्ट्यम् ।
- चीन-टिब्बेट्-इत्यादिबौद्धमतप्रशस्तदेशेषु अपि अस्य कवेः प्राशस्त्यं नितरां वर्तते ।



- गौतमबुद्धस्य भ्राता नन्दः कथं बौद्धमतं स्वीचकार इति अस्य काव्यस्य वृत्तान्तः ।
- भार्यालोलुपः, ऐहिकसुखेच्छुकः नन्दः, गौतमबुद्धस्य प्रेरणया कथं बौद्धधर्मदीक्षां सम्प्राप्य तपो निरतः सञ्जातः इति काव्येऽस्मिन् वर्णयामास कविः ।
- काव्येऽस्मिन् 18 सर्गाः सन्ति ।

Contd......



- अस्य भाषा प्रौढा, मधुरा च अस्ति ।
- अस्मिन् बौद्धधर्मस्य अमूल्याः उपदेशाः लभन्ते ।
- सुन्दरी-नन्दयोः श्रृङ्गारवर्णनं, नैके बौद्धमतसम्बद्धदार्शनिकाः अंशाश्च अस्य काव्यगतविशेषाः ।



- संस्कृतवाङ्मये प्रौढकविषु पञ्चमहाकाव्यकर्तृषु च अयम् अन्यतमः ।
- अयम् ईसवीयाब्दस्य षष्ठ्यां शताब्द्यां जनिम् अवापेति इतिहासकारिभिः निर्णीयते ।
- 'किरातार्जुनीयम्' इति तस्य कृतिरेकैव तथापि अनया अनुपमं यशः लब्धवान् अयं कविः ।
- बहिः अर्थगाम्भीर्यमूलकक्लिष्टत्वाद् अन्तश्च सरसार्थवत्त्वाद् 'नारिकेलफलसम्मितं वचो भारवेः' इत्युक्त्या उदीर्यते अयं कविः ।
- गभीरपदप्रयोगाः, भावप्रकटनाश्च अस्य काव्ये दरीदृश्यन्ते । अतः 'भारवेः अर्थगौरवम्' इत्युक्तिः प्रसिद्धा जाता ।

Contd……



- अस्य कवेः भाषायां लालित्यस्य माधुर्यस्य प्रौढत्वस्य च समीचीनः समन्वयो लक्ष्यते ।
- अस्य कवेः काव्यसौन्दर्यम् उद्वीक्ष्य अस्य ‘आतपत्रभारविः’ इत्युपनाम सञ्जातम् । सुवर्णछत्रस्य व्योम्नि कल्पनैव कविम् ‘आतपत्रम्’ आपादयति ।
- जलक्रीडावर्णने सम्भोगशृङ्गाररस्य रुचिरं चित्रम् उपन्यस्यति ।
- एकाक्षरात्मकः श्लोकोऽयं तस्य वाग्वैभवं द्योतयति –

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥

- ‘स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ।’



- इदं पञ्चमहाकाव्येषु एकः बृहत्त्रय्याम् अन्यतमश्चेति गण्यते ।
- अष्टादशात्र सर्गाः ।
- किरातवेषधारिणा शिवेन सह अर्जुनस्य सङ्गरः अत्र वर्ण्यते ।
- वीररसोऽत्र प्रधानः अन्ये च गौणाः ।
- श्री-समन्वितं काव्यमेतदिति संसूचनाय ‘श्रीः’ इति शब्देन महाकाव्यमिदम् आरभते, प्रतिसर्गान्ते च ‘लक्ष्मीः’ इति शब्दं प्रयुङ्क्ते ।

**Contd……**



- वैदिकसाहित्य-दर्शन-धर्मशास्त्र-राजनीतिशास्त्र-कामशास्त्र-पुराणादि-नैकानां शास्त्राणां काव्येऽस्मिन् अस्खलिता गतिः दृश्यते ।
- काव्येऽस्मिन् शतशः सूक्तिमुक्तानां विनिवेशः कवेरस्य गुणगौरवं व्यनक्ति ।
- काव्यमिदं गुणत्रयसमन्वितत्वाद्, भाषासौष्ठवाद्, भावगाम्भीर्याद्, रसान्वितत्वाद् अलङ्कारैः अलङ्कृतत्वात् कल्पनाप्रचुरत्वात् विद्वज्जनकण्ठहारत्वम् अगात् ।



- संस्कृतवाङ्मये प्रौढकविषु पञ्चमहाकाव्यकर्तृषु च अयम् अद्वितीयः ।
- ‘शिशुपालवधम्’ इति कवेरेतस्य गौरवदायकं ग्रन्थरत्नम् एकमेव उपलभ्यते ।
- महाकवेः कालिदासस्य कृतिषु उपमानां प्राधान्यं, भारवेः अर्थगौरवस्य वैशिष्ट्यं, दण्डिनः कृतौ दशकुमारचरिते पदलालित्यं च माघकृतौ त्रयाणामपि गुणानां समन्वयं समीक्ष्य साह्लादम् उद्घोष्यते विपश्चिद्भिः यथा –

‘उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥’

Contd…



- अस्य चमत्कृतिकरं पाण्डित्यं काव्ये प्रतिपदं पदलालित्यं माधुर्यञ्च प्रेक्ष्य 'काव्येषु माघः' इति प्रशंसन्ति ।
- काव्येऽसमिन् तस्य विशालं शब्दकोशमुद्वीक्ष्य मल्लिनाथसूरिणा इत्थं निगद्यते

  'नवसर्गे गते माघे नवशब्दो न विद्यते' इति।
- मेघदूतस्य शिशुपालवधस्य च अनुशीलने आयुर्व्यतीतं भवति इति इत्थम् उच्यते-

  'माघे मेघे गतं वयः' इति ।
- शास्त्रीयज्ञानं, काव्यगौरवं, नीतिशास्त्रतत्वं, विविधविद्याविशारदत्वञ्च तस्य गरिमाणं प्रथयति ।

Contd...



- अस्मिन् महाकाव्ये विंशतिः सर्गाः सन्ति ।
- ‘शिशुपालवधम्’ इति महाभारतात् कञ्चन अल्पम् अंशं स्वीकृत्य विंशतिसर्गेषु बहुभिर्वर्णनैः आकाव्यं वर्णयामास कविः ।
- काव्येऽस्मिन् श्रीकृष्णः नायकः शिशुपालश्च प्रतिनायकः ।
- अस्य काव्यस्य अङ्गीरसः वीरः तथा शृङ्गार-हास-शान्तरसाश्च अङ्गरसाः ।

Contd.....



- ‘श्रीः’ इति शब्देन महाकाव्यमिदम् आरभते ।
- काव्येऽस्मिन् न केवलं काव्यशास्त्रस्य अपि तु व्याकरण-सङ्गीत-राजनीति-अर्थशास्त्र-पाकशास्त्र-युद्धशास्त्रादीनां बहूनां शास्त्राणां समन्वयः दृश्यते ।
- काव्यस्यास्य अष्ट व्याख्यानानि समुपलभ्यन्ते एषु मल्लिनाथस्य ‘सर्वङ्कषा’ अत्यन्तं प्रसिद्धम् ।



- संस्कृतवाङ्मये प्रौढकविषु पञ्चमहाकाव्यकर्तृषु च अयम् अन्यतमः ।
- ‘नैषधीयचरितम्’ इति महाकाव्यं कवेरेतस्य अस्मिन् काव्यजगति मुकुटालङ्कारः इव भाति ।
- इयं च अस्य कृतिः सुधीभिरेव आस्वादनीया अतः साधूक्तम्-

  ‘नैषधं विद्वदौषधम्’ इति ।
- स्थैर्यविचारम्, खण्डनखण्डखाद्यम्, विजयप्रशस्थिः, गौढोर्वीशप्रशस्तिः, छिन्दिप्रशस्तिः, नवसाहसाङ्कचरितम्, अर्णववर्णनम्, शिवशक्तिसिद्धिः, ईश्वरात्रिसन्धिः च अस्य कवेः अन्याः प्रमुखाः रचनाः ।

contd.....



- अयं कविः विविधविद्यापारदृश्वा ।
- नैषधे स्वव्युत्पत्तिप्रदर्शनोपक्रमे स प्रतिपदं क्लिष्टत्वं दुरूहत्वं च उपपादयति ।
- विविधशास्त्रीयसिद्धान्तवर्णनात्, श्लिष्ट-क्लिष्ट-पदप्रयोगात्, बहुज्ञता-प्रदर्शनाच्च इयमुक्तिः प्रसिद्धा जाता –

उदिते नैषधे काव्ये, क्व माघः क्व च भारविः ।



- पञ्चमहाकाव्येषु बृहत्त्रय्यां च अन्यतमा एषा कृतिः ।
- काव्येऽस्मिन् द्वाविंशतिः सर्गाः सन्ति ।
- महभारतात उद्धृता नलदमयन्त्योः कथा अस्य काव्यस्य प्रमुखः वृत्तान्तः ।
- काव्यस्य अस्य 23 व्याख्यानानि सन्ति । तेषु मल्लिनाथस्य 'जीवातुः' इति व्याख्यानं सुप्रसिद्धम् ।

Contd….



- नलवर्णनं, तस्य विहारः, दमयन्तयाः सविधे हंसस्य नलवर्णनं, नलं प्रति तस्याः मनसि जनितः अनुरागः, विरहः, स्वयंवरम्, इन्द्रादिदेवतानां नलस्य दौत्यं, स्वयंवरे सरस्वतीदेव्या कृतं राज्ञां वर्णनं, देवतानुग्रहेण दमयन्त्या नलस्य अभिज्ञानं, तयोः विवाहवर्णनम्, कलेः विझृम्भणम्, इत्यादयः अस्य वृत्तान्तस्य प्रमुखाः अंशाः ।
- काव्येऽस्मिन् प्रतिपदं व्याकरणविशेषज्ञतां, भावगाम्भीर्यं, पदमाधुर्यं, भाषासौष्ठवं, रसपरिपाकं च प्रकटयति ।

